

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका

अक्टोबर् २०१९, रू. ५/-

## तिरुमल
## श्रीवेङ्कटेश्वरस्वामिनः
## वार्षिक ब्रह्मोत्सवः

३०-०९-२०१९ तः
०८-१०-२०१९ पर्यन्तम्

अयमेव श्री वेङ्कटेशः श्रीपतिश्च!
अयमेव पावनवैकुण्ठपतिः !!
अन्नमय्य

तिरुमलतिरुपतिदेवस्थानम्

# तिरुचानूरु श्री पद्मावती मातुः वार्षिक ब्रह्मोत्सवः

२३-११-२०१९
तः
०१-१२-२०१९
पर्यन्तम्

२३-११-२०१९
स्थिरवासरः
प्रातः ध्वजारोहणम्
रात्रौ - लघुशेषवाहनम्

२४-११-२०१९
भानुवासरः
प्रातः महाशेषवाहनम्
रात्रौ - हंसवाहनम्

२५-११-२०१९
इन्दुवासरः
प्रातः मौक्तिकमण्डपम्
रात्रौ - सिंहवाहनम्

२६-११-२०१९
भौम्यवासरः
प्रातः कल्पवृक्षवाहनम्
रात्रौ - हनमद्वाहनम्

२७-११-२०१९
सौम्यवासरः
प्रातः आन्दोलिकासेव
सायं - वसन्तोत्सवः
रात्रौ - गजवाहनम्

२८-११-२०१९
बृहस्पतिवासरः
प्रातः सर्वभूपालवाहनम्
रात्रौ - गरुडवाहनम्

२९-११-२०१९
भृगुवासरः
प्रातः सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

३०-११-२०१९
स्थिरवासरः
प्रातः रथोत्सवः
रात्रौ - अश्ववाहनम्

०१-१२-२०१९
भानुवासरः
प्रातः चक्रस्नानं, पञ्चमीतीर्थं
रात्रौ - ध्वाजावरोहणम्

# गीतामृतम्



पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता।।

हे आचार्य! तव धीमता शिष्येण द्रुपदपुत्रेण धृष्टद्युम्नेन व्यूढां पाण्डुपुत्राणां महतीं सेनां पश्य!

(भगवद्गीता १/३)

# सङ्कीर्तनम्

माधव केशव मधुसूदन विष्णु
श्रीधरापदनखं चिन्तयामो वयम् ।।माधव।।

वामन गोविन्द वासुदेव प्रद्युम्ना
राम रामकृष्ण नारायणाच्युत

दामोदरानिरुद्ध दैव पुण्डरीकाक्ष
नामत्रयोधीश नमो नमो ।।माधव।।

पुरुषोत्तम पुण्डरीकाक्ष दिव्य
हरि संकर्षण यथोक्षज
नरसिंह हृषीकेश नगधर त्रिविक्रम
शरणागतरक्ष जयजय सेवे ।।माधव।।

महित जनार्दन मत्स्यकूर्मवराह
सहज भार्गव बुद्ध जय तुर(ग) कल्कि
विहित ज्ञान श्रीवेङ्कटेश शुभकरम्
अहमिह तवपददास्यमनिशं भजामि ।।माधव।।

(श्री अन्नमाचार्यस्य संस्कृतसङ्कीर्तनानि)

अस्याः शिखापदे श्रीधरपदनखं चिन्तयामो वयमिति आचार्याः महत्या भक्तया परवशाः भूत्वा लिखन्ति। एतादृशनखप्रभावचिन्तनं हरिभक्तेषु प्रसिद्धमेव। नरसिंहरुपस्य भगवतः नारायणस्य नखानाम् आर्तिच्छेदकत्वं बहुधा वर्णितं कविभिः स्वकुतिषु।

# परंधामस्य दशदिवसोत्सवे भागगृहीतारः भवेम!

विश्वान्तराले अद्भुततया, अनन्ततया व्याप्तः दिव्यतेजोराशिः श्रीवैकुण्ठात् भुविं प्राप्य प्रायः पञ्चसहस्रवर्षेभ्यः प्राक्, कन्यामासे (सौरमानानुसारं) श्रवणानक्षत्रदिने, वेङ्कटाचलक्षेत्रे स्वयं व्यक्तरूपेण प्रकटितोभूत्वा नानाविध प्रकाशैः शोभते। तद्दिनात् आरभ्य सा दिव्यमङ्गळतेजोयुतचैतन्यमूर्तिः ''वेङ्कटेश'' नाम्ना, तच्च स्थलं 'श्रीवेङ्कटाचलम्' इति नाम्ना प्रसिद्धं प्राप्तौ। 'वाञ्छितफलदाता' इति नाम्ना, 'भक्तोभ्यः कल्पवृक्षः' इति नाम्ना, 'कामधेनुः' इति नाम्ना, 'रोगहर्ता' इति च नाम्ना ब्रह्मादि देवेभ्यः कीर्तितस्य श्रीवेंङ्कटेश्वरस्वामिनः प्राचीनकालात् नानाविधाः सेवाः, नानाविधोत्सवाः, आचर्यमाणाः सन्ति। तेषु सर्वेषु वर्षे एकवारं दशदिनानि आचर्यमाणं ब्रह्मोत्सव वैभवं वर्णितुं वचनान्यापि अल्पान्येव भवन्ति।

पुरा स्वयंव्यक्त रूपेण आविर्भूतस्य श्रीवेङ्कटेशस्य कन्यामासे श्रवणानक्षत्रं यावत् दशदिनानि चतुर्मुख ब्रह्मदेवेन निर्वहितः 'ब्रह्मोत्सवः' अधुनापि प्रवर्तन्ते। अस्मिन् वर्षे कन्यामासः आश्वयुजमासेन युतः इति कारणात् तिरुमल श्री स्वामिनः ब्रह्मोत्सवः आश्वयुज शुक्ल द्वितीया सोमवासरे (सेप्टेम्बर् ३०) रात्रि कालात् आरभ्य आश्वयुजशुक्ल दशमी मङ्गलवासरः, श्रवणानक्षत्रदिने प्रातः काले चक्रस्नानपर्यन्तं (अक्टोबर्-८) परिसमाप्तिर्भवति।

प्रथमदिवसे रात्रौ महाशेषवाहनेन प्रारभ्यमाणः श्री स्वामिनः ब्रह्मोत्सवः, प्रतिदिनं प्रत्येकस्मिन् काले, एकैकस्मिन् वाहने नानाविध भूषणैषु, अवतारेषु, भक्तान् रञ्जयति। श्री स्वामिनः वाहनसेवाः भक्तान् आनन्दसागरे निमग्नं राप कारयन्ति। तेषु विशेषतया पञ्चमदिवसस्य रात्रौ भूयमाना 'श्रीस्वामिनः गरुडसेवा' एवञ्च अष्टमदिने प्रातः भूयमानः 'रथोत्सवः' भक्तान् विशेषतया रञ्जयतः।

तिरुमलायां ब्रह्मोत्सवे श्रीस्वामिनः वाहनसेवाः प्रख्याताः। ताभ्यः साकं नृत्य-गीता-भजन-विन्यास-वेषधारण-सङ्कीर्तन-वेद-पारायण-दिव्यप्रबन्धगानाः साहित्य प्रसङ्गाञ्च आचर्यन्ते। तेषां वर्णनमपेक्षया प्रत्यक्षदर्शनम् इतोपि आनन्दं कारयति।

ब्रह्मोत्सव सन्दर्भे श्रीस्वामिनः वाहन वैभवेन साकं विचित्रतेजोभिर्युक्तान् विद्युदलङ्करणा दृश्यान् पुष्पालङ्कारान् च सन्दर्शयितुं लक्षसः भक्ताः समागच्छन्ति। श्री वराहस्वामि आलयः, श्री स्वामिपुष्करिणी, पंक्तयः, श्रीस्वामिनः आलयः, अन्नप्रासादभवनम्, आवासस्थानानि, बस स्थानानि, उद्यानवनानि... एवं तिरुमलायां सर्वत्रापि भक्तजन सन्दोहः दृश्यते। एवं अपि भक्तजनसन्दोहं दृष्टिपथे स्थाप्य तिरुमलतिरुपतिदेवस्थानम् अहरहः अन्नदानकेन्द्रेषु, पङ्क्तिस्थलेषु, वाहनसेवासु एवं सर्वत्रापिदेवस्थानस्य परिवेक्षणे उद्योगिनः, श्रीस्वामिसेवकाः, रक्षकाश्चा भक्तसौलभ्याय तत्पराः। दर्शनार्थमागताः भक्ताः क्रोधावेशेत्यक्त्वा पङ्क्तिषु संयमनम् आचरेयुः। देवस्थाने सहकृताः सन्तः प्रशान्ततया तिरुमलयात्रां सम्पूर्णफलयुतं कुर्वन्तु इति आकांक्षां कुर्वती 'तिरुमल परंधामस्य दशदिन उत्सवार्थं' घनस्वागतं करोति 'सप्तगिरि' पत्रिका!

ॐ नमो वेङ्कटेशाय

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०६ सञ्चिका-०७

# अक्टोबर् २०१९

श्रीविकारिनामसंवत्सरस्य आश्वयुजशुक्ल तदिय तः
कार्तिकशुक्ल चविति पर्यन्तम् - १९४१




**मुखचित्रम्** – श्रीदेवी भूदेवी समेत आनन्दनिलयः

**अन्तिमरक्षापुटः** – श्रीस्वामिपुष्करिणीः श्रीवारि चक्रस्नान उत्सव वैभव दृश्यम्


गौरवसम्पादकः-
श्री अनिल्कुमार् सिंघाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री आर्. वि. विजयकुमारः B.A. B.Ed.,
उपकार्यनिर्वहणाधिकारिणी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

वर्णचित्रविन्यासकः - श्री पि.शिवप्रसादः, ति.ति.दे.,
विश्रान्तचित्रकारः

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्केटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.


**सूचना**

मुद्रितलेखानां विचाराः लेखकानामेव ।
एतद्विषये अस्माकं दायित्वं नास्ति।

*– प्रधानसंपादकः*


## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,
तिरुपति - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
संपर्क कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org



एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# श्री वैखानस भगवच्छास्त्रोक्त ब्रह्मोत्सव विशेषाः



- रोम्पिचर्ल यशवन्त दीक्षितः

विमल कमलहारं विश्रुताचारपूरम्
विनमित सुनवारं क्लुप्तलोकोपकारम्।
विमत जन विदूरं विष्णु चेतो विहारम्
विखनस मुनि सूरिं वेद सारज्ञ मीडे।।

श्रियः पतेः श्रीमदखिलाण्डकोटि ब्रह्माण्ड नायकस्य अपारकारुण्य जलधेः आर्तरक्षण दीक्षितस्य श्री महाविष्णोः त्रिविध उत्सवेषु। ''द्वादश मासेषु एकस्मिन् मासे नित्यं अब्दं प्रति तत् काले सङ्कल्प्य यः उत्सवः क्रियते सः नित्योत्सवः'' इति मरीचि मतं अनुसृत्य नित्योत्सव नाम्ना व्यवह्रियमाणः उत्सवः अयं ब्रह्मोत्सवः।

**ब्रह्मोत्सव शब्दस्य अर्थः** ब्रह्मणा कृत उत्सवः ब्रह्मोत्सवः इति वदन्ति। वराह पुराणान्तर्गत श्री वेङ्कटाचलमाहात्म्ये ''ब्रह्मक्लुप्तोत्सवायच'' इति श्री वेङ्कटेशाष्टोत्तर संवादेन चतुर्मुख ब्रह्मणा कृत उत्सवः अयं उत्सवः इति वदन्ति किन्तु चतुर्मुख ब्रह्मणः पूर्वः

''खनित्वाचात्मनात्मानम् ज्ञानादिगुण संयुतः।
ध्यानमाविश्वयोगेन ह्यासीद्विखनोमुनिः''।।

इत्यनेन श्लोकाधारेण ब्रह्मशब्दवाच्यः विखनसः इति तेन कृतः अयं उत्सवः इति आख्यं बृवन्ति केचन
''ओं अथ नित्योनारायणः ब्रह्मानारायणः''
''नारायण परं ब्रह्म तत्त्वं नारायणः परः इत्यादिभिः बहुभिः शृतिभिः ब्रह्म शब्दवाच्यः नारायणः तस्मै क्रियते उत्सवः ब्रह्मोत्सवः इति वदन्ति।

**उत्सवः नाम भृगुणा एवं प्रोक्तम् -**

''उदित्युन्कृष्टवचनं सवो यज्ञ उदाहृतः।
तस्मात् उत्कृष्ट यज्ञत्वात् उत्सवः परिभाष्यते।।
स यज्ञोवोनरायुष्मान् उत्तारयति निश्चयम्।
इति वेदावदन्तीति सः उत्सवः उदीर्यते।।

इत्यादि भृगुवचनैः। उत् नाम उत्कृष्ट वचनं सवः नाम यज्ञः (यज्ञः सेवो अध्वरोयागः सप्ततन्तुर्मखः क्रतुः इति अमरकोशे) उत्कृष्ट यज्ञः इति वदन्ति। पुनः अमुं उत्सवं कति दिनात्मकं करणीयं इति जिज्ञासायां प्रकीर्णाधिकारे भृगुः एवं कथयति।

''उत्तमंतु त्रिसप्ताहं मध्यमं स्याच्चतुर्दश।
नवाहं वाथ सप्ताहं अधमं परिचक्षते।।

इति कथयति। अर्थात् त्रिसप्ताहं नाम एक विंशति दिनानि यावत् अयं उत्सवः क्रियते चेत् उत्तमम्। चतुर्दश दिनानि क्रियते चेत् मध्यमम् नवदिनानि वा सप्तदिनानि वा करोति चेत् अधमं इति। अत्र उत्सव दिन संख्या विषये महर्षयः एव मतान्तराणि बहूनि स्थापितवन्तः। उदाहरणरुपेण पश्याम चेत् त्रिगुणी कृत नवाह्निकं नाम सप्त विंशति दिनानि करोति चेत् उत्तमोत्तमं इति पञ्चाहं करोति चेत् अधमाधमं इति एवं नवप्रकाराः केचन वदन्ति। प्रस्तुतं यदि पश्यामः चेत् केचन नवाहं, सप्ताहं, पञ्चाहं आह्निकत्रयं तेषां शक्त्यानुसारेण आचरन्ति। तत्रापि पुनः नवाह्निकं इत्युक्ते सार्वकामिकं इति, पञ्चाह्निकं इत्युक्ते भौतिकं इति, त्र्याह्निकं चेत् गौणं इति, एकाहं चेत् मङ्गळं इति तेषां विशेष संज्ञानि कथयन्ति।

अस्तु अत्र उत्सवः कथं आरम्भं कुर्वन्ति। इत्युक्ते आदौ चक्रस्नानस्य निर्णयं कुर्वन्ति। केषु दिनेषु चक्रस्नानं करणीयं इति मरीचिः तथैव भृगुः अपि कथयति।

**मरीचिः -** राज्ञो ग्रामस्य यजमानस्य वा जन्मर्क्षे, प्रतिष्ठादिने विष्णु पञ्चकदिनेषु वा अवभृदं सङ्कल्प्य। तत् पूर्वं नवमे, सप्तमे, पञ्चमे तृतीयेवा अहनि अङ्कुरार्पणं कुर्यात्।

**भृगुः -** विषुवाय भूपरीक्ष प्रतिष्ठा कर्तृ भेषु च ग्रहणे मास नक्षत्रे विष्णु पञ्चदिनेषु इति आरभ्य उत्सवस्यान्त दिवसे तेषु तीर्थं प्रकल्पयेत् इति कथयति।

अन्येषु केषुचित् ग्रन्थेषु राज्ञो ग्रामस्य यजमानस्य वा जन्मर्क्षे प्रतिष्ठादिने, विष्णुपञ्चकदिनेषु तुलामेषयोः मकर कर्काटयोः अन्यसंक्रान्तौ, सूयैन्दु ग्रहणयोः श्रवण युक्तं द्वादश्यां रविवारयुक्त संक्रान्त्यां विषुवे अयने वा अतीव मुख्यत्वेन अवभृदं संकल्प्य उत्सवः कर्तव्यः इति महर्षयः बृवन्ति उत्सवारम्भात् पूर्वं मरीच्युक्त प्रकारेण

आलयस्य पुरतः अथवा दक्षिणे आस्थान मण्डपं, तत् पुरतः नृत्तमण्डपं आलयाभिमुखे दक्षिणे वा आग्नेय्यां वा यागशालां, कल्पायित्वा निर्मित मण्डपेषु वितान ध्वजदर्भमाला तरङ्ग स्तम्भवेष्टन, मुक्तादमाद्यैः अलंकुर्वन्ति। द्वारेषु अपि तोरण कदळी क्रमुक दीपाङ्कुरैः अलंकुर्वन्ति। न केवलं तु आलयः सम्पूर्ण ग्रामं अपि अलंकृत्य गृह द्वाराणि अपि दीपाङ्कुरोदकुम्भाद्यैः अलंकृत्य ग्राम वीधीश्च संशोधनं कुर्वन्ति।

उत्सवार्थं शिबिकादि यानानि नामरथरङ्गडोला यन्त्र मुखमण्डप, गरुड, सिंह व्याळ भ्रमणादीनि यानानि सज्जीकुर्वन्ति। तथैव

मालादीप, यन्त्रदीप, हस्तदीप, शूल दीपान्, ताळ, काहळ, मुरज, वंश, झर्जर, दर्दुर, शंख वीण, वेणु वाद्यानि समित्पुष्प दर्भ होम द्रव्याणि सर्वाणि सम्भृत्य ब्राह्मणान् नर्तकान्, गायकान्, भक्तान्, सर्वान् आह्वय्य उत्सवं कुर्वन्ति।

तत्र प्रथम दिने ऋत्विक वरणात् आरभ्य अन्तिमे पुष्प याग पर्यन्तं बहवो शास्त्र विषयाः वर्णिताः सन्ति। किन्तु

''अनन्तसारं बहुवेदितव्यं अल्पश्चकालो बहवश्च विघ्नाः। सारं ततो ग्राह्य उपास्य फल्गुं हंसैर्यथा क्षीर मिवाम्बु मध्ये''॥ इत्युक्त न्यायेन तत्र स्थित विशेषान् एव स्पृशामः।

**आचार्य वरणम्** उत्सवदिनात् पूर्वस्मिन् दिने यजमानः परम सात्त्विको भूत्वा, सकल कल्याण गुणाकरस्य भगवतः श्रीमन्नारायणस्य कैङ्कर्यरूपं महोत्सवं आरभ्यमाणः। संस्कृति सिन्धुनिमज्ज्ञचोतनोद्धरणचणं श्री वैखानस तत्त्वविदं, परमैकान्तिनं श्रीवैष्णवाग्रेसरं एकं आचार्यं आहूय तस्मै उत्सवकैङ्कर्यं अर्पयन्ति अनन्तरं आचार्यः पञ्चऋत्विजान्, पञ्चपरिचारकान् स्वीकृत्य ते सर्वे कङ्कण धारणं कृत्वा देवाय याग दीक्षा कौतुक बन्धनं धारयन्ति। किं आचार्य वैशिष्ट्यं इत्युक्ते।

**''दैवाधीनं जगत् सर्वं मन्त्राधीनं तु दैवतम्।**
**तन्मन्त्रं ब्राह्मणाधीनं ब्राह्मणो मम दैवतम्॥**

इति भगवतोक्तरीत्या आचार्य वरणं आदौ कृत्वा अन्तिमे नाम सम्पूर्ण उत्सवान्ते अपि आचार्य पूजां आचरन्ति।

**पञ्चगव्याराधनम् -** गोघृत, गोदधि, गोक्षीर, गोमय, गोमूत्रादीनि पञ्चगव्यानि एतानि सर्वाणि गोसम्बन्धितानि एव गोः विकाराः इत्यपि वदन्ति। किमर्धमित्युक्ते ''गावो हिमे मातरस्सन्तु सर्वा मे गोवृषाः पितरस्सन्तु सर्वे'' इत्यादि शृति वाग्भ्यैः गोः वैशिष्ट्यं वक्तुं शक्यते। तदर्ध गोः सम्बन्धितानि स्वीकुर्वन्ति उत्सवे एतत् कार्यं किमर्ध कुर्वन्ति चेत् सर्वेषां यजमानानां, ऋत्विक् परिचारकादीनां पापक्षयार्धं कुर्वन्ति। तेन कारणेन



**''यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके।**
**प्राशनं पञ्चगव्यस्य दहत्यग्निरिवेन्धनम्॥** इति

अर्थात् अस्थिषु स्थित पापं अपि पञ्चगव्यप्राशनेन नश्यति इति तत् कथं इत्युक्ते अग्नौ काष्ठं स्थापयामः चेत् कथं दहति तथैव पापं अपि नश्यति इति शास्त्र वचनम् अनन्तरं

**विष्वकसेन पूजा**

**आरम्भे कर्मणां पुष्ट्यै विघ्नानां प्रशमायच्।**
**कुर्यात् सपरिवारस्य विष्वक्सेन स्य पूजनम्॥** इति

अर्थात् कर्मपुष्ट्यर्धं विघ्न निवाराणार्धं विष्वकसेन पूजां आचरन्ति।

**पुण्याहम् -** अस्मिन् कार्यक्रमे न्यूनानिरिक्तदेष निवृत्तिद्वारा कर्य साफल्यार्धं पुण्याहं कुर्वन्ति तेन कारणेन तदहः पुण्यं भवति। पुण्याहेन सर्वाः क्रियाः परिपूर्णाः भवन्ति इति भगवता विखनसेन कल्पसूत्रे प्रोक्तम् ततः परं अजस्रदीपाराधनं अपि कुर्वन्ति, अयं कार्यक्रमः प्रथमदिने कृत्वा आक्रियान्तं अजस्रं परिरक्षयन्ति।

**अङ्कुरार्पणम् -** अस्मिन् कार्यक्रमे ऊनपञ्चाशत् देवतानां आवाहनं कृत्वा। तत्र एकं कुम्भं संस्थाप्य तस्मिन् सोमं अभ्यर्च्य। ततः परं पालिका कुम्भ शरावान् पूजयित्वा नाम तत्रापि विशेषमंत्रैःआवाहनं भवति। ततः परं पूर्वाह्ने तोयेनिक्षिप्त शालि, व्रीहि, यव, माष, मुद्ग, तिल, तिल्व गोधूम सर्षप, चणक , धान्यानि तेषु पूरयित्वा पुनः मृत्तिकां संस्थायप्य अर्कपत्रैर्वाएरण्डपत्रैः वा आच्छादयन्ति।

अनन्तरं वास्तुपूजां, वास्तुहोमं अपि कुर्वन्ति किमर्धं नाम ध्वजपट शुद्धयर्धं वास्तुहोमं कृत्वा, गरुडस्य अक्षि मोचनं कुर्वन्ति।

**भेरीपूजा - भेरीताडनम्** ध्वजारोहणात् पूर्वं भेरीपूजां कुर्वन्ति आदौ तस्यां भेर्यां आवाहनं ततः परं चर्मणि, सूत्रे, दक्षिणोत्तरयोः, दक्षिणवामसुषिरयोः वलये, तद्बन्धे, दण्डे, वादके अपि आवाहन अर्चनादिकंकृत्वा भेरीताडनं कुर्वन्ति। अत्र को विशेषः इति चेत्।

**"ब्रह्मेन्द्रनारायण रुद्रमूर्तेः स्थित्वा पुरस्तान्मुर शासनस्य।**
**"चतुष्पदाश्च द्विपदां विभूत्यै भेरीमहं सम्प्रति ताडयामि।।**
**"व्योमक्षिति स्वर्ग तल स्थितानां हिताय पाताळ निवासिनां च।**
**विनाश हेतोः सुरविद्विषां च भेरीमहं सम्प्रति ताडयामि।।**

इति वदन्ति अर्थात् भूमौ, स्वर्गे, आकाशेषु स्थित जनानां हिताय, राक्षसाणां विनाशाय सम्प्रति अहं भेरीं ताडयामि इति कथयति।

तत्र गरुड, चक्र, विष्वक्सेन, विष्णु, वराह, नृशिंह, राम, कृष्ण इत्यादि देवानां गद्यालापनं कृत्वा राग ताळ महावाद्यैः देवं सेवयन्ति।

**आलयबलि, ग्रामबलिहरणं च -** गद्यपद्य आलापनानन्तरं आलयेस्थित मणिकादि देवेभ्यः बलिं अर्पयन्ति।

ततः परं ध्वजपटं शिबिकायां संस्थाप्य सुदर्शन चक्रं अपि स्वीकृत्य ग्राम बल्यर्धं ग्रामं प्रति गच्छन्ति। इन्द्र दिशं प्रतिगत्वा इन्द्रं तथा आग्निं, यमं निरऋतिं, वरुणं, वायुं, कुबेरं ऐशानं आह्वय्थ बलिं अर्पयन्ति कथं आह्वयन्ति चेत्

**"अस्मिन्देवोत्सवे सर्वे समागच्छन्तु सादराः।**
**बलिमादाय सम्प्रीताः शुभदाश्च भवन्तुते।।**

इति उक्त्वा भवन्तः सेर्वपि भगवतो नारायणस्य नवाह्निक दिव्य महोत्सव सेवार्धमागत्य यथोचित कैङ्कर्यासक्त चित्ताः सुप्रीताः सुप्रसन्नाः वरदाः भवन्तु इति स विनय पूर्वक स्वागतं गद्य, पद्य, पदराग ताळैः तेषां मनोरञ्जनं कारयित्वा आह्वयन्ति।

**ध्वजारोहणम्** ध्वजस्य आरोहणं ध्वजारोहणं तथैव ध्वजे गरुडस्य आरोहणं ध्वजारोहणं इति केचन वदन्ति। वस्तुतः प्रायः सर्वेषु स्थलेषु ध्वजे गरुडस्य आरोहणं कारयन्ति। किन्तु शास्त्रे ध्वजदण्डं प्रत्येकं उत्सवस्यकृते वेणु, जाति, चम्पक कुमुक वृक्षेभ्यः काष्ठं स्वीकृत्य ध्वज दण्डं निर्माणं कृत्वा तदग्रे पटलिखित गरुडं योजयित्वा गरुड लग्नाष्टकानि, गरुड चूर्णिकां पठित्वा ध्वजं प्रतिष्ठापयामि इति ध्वजं संस्थाय ध्वजदेवार्चनं कृत्वध्वात्वारुडंध्वात्वा गरुडस्य निवेदितं अन्नं कबळानि कृत्वा आचार्यः सन्तान कामिनीभ्यः स्त्रीभ्यः, फलकामिभ्यः पुरुषेभ्यः ददन्ति तेन सर्वान् कामान् आप्नुवन्ति इति मरीचिमहर्षि वचनम्।

**उत्सवेस्नपनम् -** नारायणस्य क्रियमाण उत्सवे प्रथमदिने चतुर्दश कलश स्नपनं कुर्वन्ति। तत्र चतुर्दश कलशानि स्थापयित्वा तत्र सप्त प्रधान कलशेषु क्रमेण,क्षीर, घृत, मधु, सर्षप, अक्षत, कुश, चन्दन द्रव्याणि पूरयित्वा सप्त उपस्नान कलशेषु सामान्य जलं स्थापयन्ति। ततः परं अर्चनादिकं कृत्वा देवस्य स्नपनं आचरन्ति। तेन को लाभः इति पृच्छते चेत् क्षीरेण स्नपनं करोति चेत् अथर्ववेदाध्ययन फलं प्राप्नुवन्ति। घृतेन करोति चेत् सामवेदाध्ययन फलं प्राप्नुवन्ति। मधुना स्नपनेन ऋग्वेदाध्ययन फलं प्राप्नुवन्ति इति शास्त्रकाराः वदन्ति। तथैव उत्सवस्यान्ते अपि स्नपनमाचरन्ति वस्तुत तिरुमलादि दिव्यक्षेत्रेषु ब्रह्मोत्सव समये प्रतिदिनं मध्याहनार्चनान्ते स्नपन तिरुमञ्जन कार्यक्रमः भवति। तथैव दाक्षिणादि देशेषु उत्सवादौ स्नपनं उत्सवान्त स्नपनं आचरन्ति।

**नवकुम्भरोपणम्** देवस्य उत्सवे विशेषतया अमुंकार्यक्रमं निर्वहन्ति। मध्येप्रधान कुम्भं संस्थाय तत्परितः अष्टौ कुम्भान् स्थापयन्ति तेषु नव कुम्भेषु नवरत्नानि, अष्टमङ्गळरुपाणि सुवर्णशकलानि, कुश कूर्च अक्षत अश्वत्थपल्लव नाळिकेरादीनि संस्थाप्य मध्ये प्रधान कुम्भे विष्णुं देव्यौ च प्राच्यां पुरुषं, दक्षिण स्यां सत्यं, प्रतीच्यां अच्युतं, उत्तरस्यां अनिरुद्धं आग्नेय्यां कपिलं, नैरृत्यां यज्ञं, वायुव्यां नारायणं, ऐसान्यां पुण्यं च धृवबेरात् कुम्भेषु आवाहनं कुर्वन्ति। अन्तिमे पूर्णाहुत्यनन्तरं पुनः धृव बेरे समारोपयन्ति।

**उत्सवेहोमः** अस्मिन् उत्सवे प्रथमदिने ध्वजपटशुद्धयर्धं वास्तुहोमं आचरन्ति। अनन्तरं सभ्याग्निः नामक कश्चन अग्निकुण्डं परिकल्पयित्वा। तत्र आघार क्रिया नाम काचित् होम पूर्व क्रियां कृत्वा हौत्र प्रशंसनं इति होमं कृत्वा तत्र सर्व देवानां आवाहनं कृत्वा होमं आचरन्ति। तथैव नित्यहोमे अपि आलये स्थित विमानपाल लोकपाल देवानां होमः वर्ष, अयन, ऋतु, मास, पक्ष, तिथि, वार, नक्षत्र, योग, करण सन्ध्या दिन दैवत्य वैष्णव, विष्णु सूक्त पुरुष सूक्त होमान् पूर्णाहूति पर्यन्तं प्रतिदिनं त्रिकालं आचरन्ति। मध्ये प्रायश्चित्तस्य आवश्यकता भवति चत् प्रायश्चित्तहोमान् आचरन्ति।






# सूचनाः एवं कर्तव्यबोधः

तेलुगु मूलम् - डा॥ वैष्णवाङ्घ्रि सेवकदासः
संस्कृतानुवादः - श्री डि.चैतन्यकृष्णः

लोके साधारणतया सूचनादातारः ब्रहवः दृश्यन्ते। किन्तु सूचनया साकं तत्काले कर्तव्यबोधं केचन एव कुर्वन्ति। मनुष्यस्य 'भय' इति महाशत्रोः विषयमधिकृत्य भगवद्गीता सूचनां प्रददात् एवमेव कर्तव्यबोधमपि अकरोत्।

**''क्लैब्यं मा स्म गमः पार्थ, नेतत्वय्युपपद्यते।**
**क्षुद्रं हृदयदौर्बल्यं, त्यक्त्वोत्तिष्ठ परन्तप॥''** (भ.गी.२.३)

प्रत्येकस्मिन् मनुष्ये शक्तिः अन्तर्हिता भवति। परन्तु भयकारणात् सा शक्तिः क्षीणा भवति। कार्यक्षेत्रे त्वरणेन, उत्साहेन कार्याचरणेन, लक्ष्यं वारं वारं स्मरणेन च शक्तिः प्रविर्धिता भवति। अर्जुनः शत्रुसैन्यं दृष्ट्वा ते सर्वे बाध्ववाः, तेः साकं युद्धं कथमिति भीतिं प्राप्तवान्। तेन तस्य शक्तिरपि क्षीणा सञ्जाता। मानसिक दौर्बल्यमेव शक्तिहीनत्वकारणं भवति। तादृशं हृदयदौर्बल्यं त्यज इति भगवद्गीता सर्वेभ्यः अव्गमयति। विद्यार्थिनः अपि एवं प्रकारेण नाना सन्दर्भेषु हृदय दौर्बल्यं प्राप्नुवन्ति। मुख्यतया परीक्षा सन्दर्भेषु, साक्षात्कार सन्दर्भेषु ते भीतिं प्राप्नुवन्ति। एवं हृदय दौर्बल्यं हीनमिति भगवद्गीता ज्ञापयति। ज्ञापनेन साकं कर्तव्यं प्रति प्रेरयति, उत्साहं च वर्धयति। धैर्ययुक्तः कदापि भीतिमप्राप्य स्वकार्ये अग्रे गच्छति।

श्रीरामः साक्षात् भगवानेव। तस्य साहाय्यं कर्तुं महाबल सम्पन्नाः वानराः आसन्। वानरसेना सेतु निर्माणकार्ये निमग्ना। बृहत् शकलान्, वृक्षान् च समुद्रे स्थाप्यमानाः सन्तः सेतुनिर्माणमारम्भं कृतवन्तः। रामकार्योत्साहं वीक्ष्य लघु चिक्रोडः रामकार्ये भागं गृहीतुं चिन्तितः। तस्य मनसि भीतिः नास्ति। महा वानरबल सैन्यं वीक्ष्य चिक्रोडः न भीतः।

साक्षात्गत्वा लघु लघु पांसवान् सः आनीय समुद्रे प्रक्षिपन् वर्तते। तं च दृश्यं दृष्वा वानराः आश्चर्य चकिताः। चिक्रोडः
तु स्वकार्यं तथैव कुर्वन् आसीत्। तस्मिन् सन्दर्भे श्रीरामचन्द्रः तस्य भक्तिं ज्ञात्वा हस्ते गृहीत्वा प्रेम्णा स्व करकमलेन तस्मै आनन्दं कारितवान्। रामेण प्रदर्शितः प्रेमः अधुनापि चिक्रोडानामुपरि रेखारूपेण वर्तते इति ज्येष्ठाः कथयन्ति।

कृषि कर्तृणां विजयम् निश्चयमेव सम्भवति। हृदय दौर्बल्यतां त्यक्त्वा ये कार्य साधनायां निमग्नाः भवन्ति तेषामुपरि ज्येष्टानाम् आशीः सर्वदा भवन्ति। अतः सर्वेपि तीव्रेच्छया, स्थिर लक्ष्येण, दृढसङ्कल्पेन च अग्रे गच्छेयुः, विजयं च प्राप्नुयुः।



# श्री सरस्वती ध्यानस्तुतिः

- एन्.नागेश्वरराव:

मूलानक्षत्र दिने आश्वयुज शुक्ल सप्तम्यां देवी नवरात्रोत्सवेषु भागत्वेन सरस्वती पूजां कृत्वा प्राचीनकाले जनाः इष्टकाम्यार्थ सिद्धिं प्राप्नुवन्। इदानीं तनकालेऽपि वयं सर्वे सरस्वत्याः पूजां कल्पोक्तप्रकारेण भक्तिश्राद्धाभ्यां विधाय वाञ्छित फलं लब्धुं शक्नुमः।

पुस्तकेषु यतोदेवी क्रीडते परमार्थतः
ततस्तत्र प्रकुर्वीत ध्यानमावाहनादिकम्।
ध्यानमेव प्रकुर्वीत साधको विजितेन्द्रियः।
प्रणवासनमारुढां तदर्थत्वेन निश्चिताम्।
अङ्कुशंचाक्ष सूत्रं च पाशं वीणां च धारिणीम्।
मुक्ताहारसमाथुक्तां मोदरुपां मनोहराम्।
कृतेन दर्पणाभेन वस्त्रेणोपरि भूषिताम्
सुस्तनीं वेदवेद्यां च चन्द्रार्धकृत शेखराम्।
जटाकलापसंयुक्तां पूर्णचन्द्रनि भाननाम्।
त्रिलोचनां महादेवीं स्वर्णनूपुर धारिणीम्।
कटकैः स्वर्णरत्नाद्यैर्मुक्तावलय भूषिताम्।
कम्बुकण्ठीं सुताम्रोष्ठीं सर्वाभरण भूषिताम्,
केयूरैर्मेखलाद्यैश्च द्योतयन्तीं जगत्त्रयम्,
शब्दब्रह्मात्मिकां देवीं ध्यानकर्म समाहितः।
रस्वत्यैनमः ध्यायामि।
शारदे लोकमातस्त्वाश्रिताभीष्टदायिनि।
पुष्पाञ्जलिं गृहणत्वं मया भक्त्या समर्पितम्।।
याकुन्देन्दु तुषारहार दवळा या शुभ्रवस्त्रावृता,
यावीणावरदण्डमण्डित करया श्वेत पद्मासना,
या ब्रह्माच्युतशङ्कर प्रभृतिभिर्देवैः सदा पूजिता
सा मां पातु सरस्वती भगवती निः शेष जाड्यापहा।।
पाहि पाहि जगद्वन्द्ये नमस्ते भक्तवत्सले।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः।।
शारदा शारदाम्बोजवदना वदनाम्बुजे।
सर्वदा सर्वदा स्माकं सन्निधिं सन्निधिं क्रियात्।।
सरस्वतिं महा भागे विद्ये कमललोचने
विद्यारुपे विशालाक्षि विद्यांदेहि नमोऽस्तुते।।
ओं भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः।
वेदवेदङ्गवेदान्त विद्यास्थानेभ्य एव च।।
सरस्वति नमस्तुभ्यं वरदे भक्तवत्सले।
उपायनं प्रदस्यामि विद्यावृद्धिं कुरुष्व मे।
भारती प्रतिगृह्णातु भारती वै ददाति च।
भारती तारकोभाभ्यां भारत्यैते नमो नमः।
यस्य स्मृत्या च नामोक्त्या तपः पूजा क्रियादिषु
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्।
मन्त्रहीनं क्रियाहीनं भक्तिहीनं सरस्वति।
यत्पूजितं मया देवी! परिपूर्णं तदस्तुते।।



तिरुमलतिरुपतिदेवस्थानम्

# तिरुमल श्रीवेङ्कटेश्वरस्वामिनः वार्षिक ब्रह्मोत्सवः

३०-०९-२०१९ तः ०८-१०-२०१९ पर्यन्तम्

## भक्तः कलाबृन्दाश्च



३०-०९-२०१९ इन्दुवासरः
रात्रौ - महाशेषवाहनम्



०१-१०-२०१९ भौम्यवासरः
प्रातः लघुशेषवाहनम्



०१-१०-२०१९ भौम्यवासरः
रात्रौ - हंसवाहनम्

तिरुमलतिरुपतिदेवस्थानम्

# तिरुमल श्रीवेङ्कटेश्वरस्वामिनः वार्षिक ब्रह्मोत्सवः

३०-०९-२०१९ तः ०८-१०-२०१९ पर्यन्तम्

## भक्तः कलाबृन्दाश्च



०२-१०-२०१९ सौम्यवासरः
प्रातः - सिंहवाहनम्



०२-१०-२०१९ सौम्यवासरः
रात्रौ - मौक्तिकमण्डपम्



०३-१०-२०१९ बृहस्पतिवासरः
प्रातः - कल्पवृक्षवाहनम्



०३-१०-२०१९ बृहस्पतिवासरः
रात्रौ - सर्वभूपालवाहनम्

तिरुमलतिरुपतिदेवस्थानम्

# तिरुमल
# श्रीवेङ्कटेश्वरस्वामिनः वार्षिक ब्रह्मोत्सवः

३०-०९-२०१९ तः ०८-१०-२०१९ पर्यन्तम्

# भक्तः कलाबृन्दाश्च



०४-१०-२०१९ भृगुवासरः
रात्रौ - गरुडवाहनम्



०५-१०-२०१९ स्थिरवासरः
प्रातः हनुमद्वाहनम्



०५-१०-२०१९ स्थिरवासरः
रात्रौ - गजवाहनम्



०४-१०-२०१९ भृगुवासरः
प्रातः
आन्दोलिकायां मोहिन्यवतारः

तिरुमलतिरुपतिदेवस्थानम्

# तिरुमल श्रीवेङ्कटेश्वरस्वामिनः वार्षिक ब्रह्मोत्सवः

३०-०९-२०१९ तः ०८-१०-२०१९ पर्यन्तम्

## भक्तः कलाबृन्दाश्च



०६-१०-२०१९ भानुवासरः
प्रातः - सूर्यप्रभवाहनम्



०६-१०-२०१९ भानुवासरः
रात्रौ - चन्द्रप्रभवाहनम्



०७-१०-२०१९ इन्दुवासरः
रात्रौ - अश्ववाहनम्

# अखण्डब्रह्मोत्सवसेवायं अष्टदिक्पालाः

तेलुगु मूलम् - एम्.वि.रमण
संस्कृतानुवादः - श्री यम्.कामेश्वररावः

पूर्वकाले कलियुगस्य आरम्भे जम्बूद्वीपस्थ भारतदेशे गङ्गनाद्याः दक्षिणायां दिशि द्विशतयोजनानां दूरे, पूर्वसमुद्रस्य पश्चिमदिशायां पञ्चयोजनानां दूरे च पुष्करिणी तीर्थस्य पश्चिमदिशायां कन्याभाद्रपदमासे एकादश्यां तिथौ - सोमवासरे श्रवणानक्षत्रयुक्त सिद्धयोगशुभलग्ने देवतासमूहेन प्रार्थितः सन् लोकरक्षकः परमपुरुषः भागवान् श्रीनिवास नारायणाख्यै अद्रौ अवतार इति पद्मपुराणोक्तिः। यदा श्रीमन्नारायणः पर्वते अवतार, ब्रह्मादिदेवताः सन्तुष्टाः भूत्वा, तस्य स्वामिनः उत्सवः विशेषरुपेण करणीयः इति संकल्पं कृतवन्तः। तेषां मनोरथं श्रीनिवासोऽपि अङ्गीचकार। तदारभ्य ब्रह्मदेवः स्वामिन उत्सवानां प्रारम्भं कृत्वा नवदिनानि यावत् वाहनसेवायां स्वामी माडवीथिषु विहरतु इति निश्चयं चकार। तेषु उत्सवेषु प्रथमतः ध्वजारोहण कार्यक्रमाय सर्वान् देवान् आह्वयत्। गरुडध्वजपटस्य आरोहणं अपि कारितवान्। तस्य कार्यक्रमस्य इन्द्रादि अष्टदिक्पालकाः आहूताः। ततः प्रभृति ब्रह्मोत्सवाः आरब्धाः, एते सर्वे अष्टदिक्पालकरूपेण ख्याति लब्धवन्तः।

एते सर्वे दिक्पालकाः ब्रह्मोत्सवसमये तिरुमाडवीथिषु अष्टासु दिक्षु विराजमानाः सन्तः। श्रीनिवासस्य रक्षां कृतवन्तः इति प्रतीतिः। तस्मिन् समये कुबेरप्रदत्तानि दिव्याभरणैः एव ब्रह्मदेवः श्रीनिवासं अलङ्कृतवान् इति ज्ञायते।तादृश विषिष्टसम्पन्नानां अष्टदिक्पालकानां विषये वयं किञ्चित् ज्ञातुं प्रयत्नं कुर्मः इदानीम्।

चतुर्षु वेदेषु ऋग्वेदः एव अत्यन्त प्राचीनतमः इति सर्वे जानन्ति एव। अत्र अग्निदेवः अग्निमीले पुरोहितं यज्ञस्य देवं ऋत्विजं होतारं रत्न सनधातमम् इति प्रस्तुतः। अत्र प्रकृतिसम्बद्धविषयाः भूगोल खगोल सम्बन्धि विषयाश्च विस्तरेण चर्चिताः। वेदकालीनाः जनाः अग्नि-वायु-नदी-मेघ-पृथ्वी-पर्वतादीन् वैदिकशक्तिरुपेण सम्भाव्य पूजितवन्तः इति ज्ञायते। श्रीमहाविष्णुः विराट् पुरुषरुपेण कीर्तितोऽपि इन्द्राग्नीनां एव अधिकं प्राधान्यं दत्तवन्तः इति ज्ञायते।

लौकिकवाङ्मययुगस्य प्रारम्भपर्यन्तं विशेषतः पुराणानां आविर्भावपर्यन्तं ब्रह्म विष्णु महेश्वराणां अपेक्षया इन्द्र अग्नि सूर्य वरुणादि देवनां एव अधिकं प्राशस्त्यं अकर्तत इति ज्ञायते। यज्ञयागादिक्रतुषु वास्तुसम्बन्धि पूजाकार्यक्रमेषु अन्यत्र कुत्रकुत्रचित् सन्दर्भेषु एव एतेषां पूजनं स्मरणं अस्माभिः क्रियमाणः दृश्यते न तु सर्वदा। एतेषु केवलं शिवस्य एव देवालयाः, सन्ति अन्येषां तु नैव । परन्तु सर्वेषां दिशां नामानि विदितानि एव।

पूर्व-पश्चिम उत्तर दक्षिण दिशाः प्रधानाः। आसां उपदिशाः एव आग्नेय नैरुति वायुव्य ईशानाः। इदानीं वयम् एतासां दिशाम् पालकानां विषये किञ्चित् ज्ञातुम् प्रयत्नं कुर्मः। तद्यथा

### १. इन्द्रदेवः -



सर्वप्रथमतः इन्द्रः देवानां अधिपतिरुपेण वेदेषु कीर्तितः। एषस्तु प्राच्यदिशायाः अधिपतिः। अस्य पिता तु अदितिः। भार्यायाः नाम शचीदेवी। वाज्रायुधसम्पन्नः। ऐरावतं

तु अस्य इन्द्रस्य वाहनम्। अस्य निवासस्थानं तु अमरावती। क्षीरसमुद्रात् उत्पन्न ऐरावत नामकं गजं, उच्चैश्रवनामकं अश्व च इन्द्रः स्वीचकार सुर असुर संग्रामे सुराः असुरान् विजित्य आनन्दं प्रापुः। तदानीं एकस्मिन् शून्यप्रदेशे देदीप्यमानं परब्रह्मस्वरुपं दृष्ट्वा ते सर्वे आश्चर्यचकिताः अभूवन्। तत् परब्रह्मस्वरुपं किम् इति ज्ञातुं प्रथमं अग्निः गतवान्। अनन्तरं वायुः गतवान्। तौ अपि ज्ञातुं असमथौ। तदा इन्द्रः गतवान्। इन्द्रः तत्र गमनापूर्वमेव ततः परब्रह्म अदृश्यं अभूत्। तत् स्थाने उमा प्रत्यक्षा अभूत्। यदा इन्द्रः पृष्टवान् तदा उमा उवाच - तत् स्वरुपं तु परब्रह्म इति तस्य अनुग्रहेण एव सुराः सर्वे विजेतारः अभूवन् इति। झटिति इन्द्रः अग्निवायुसहितः तस्य समीपं गतवन्तः। परब्रह्मस्वरुपस्य विशिष्टतां इन्द्रः ज्ञातवान्। तेन प्रकारेण इन्द्र देवराजः अभूत्। स्वर्गाधिपतिः अपि अभूत्

## २. अग्निदेवः -

अयं तु पञ्चमहाभूतेषु एकः। आग्नेयाधिपतिः। महातेजस्वी च। सप्तहस्तयुतः, चतुश्शङ्गयुतः सप्तजिह्वायुक्तः शिरद्वययुक्तः सदा हसिताननः सन् वर्तते। अस्य जनकस्तु वैश्वानरः। माता तु शुचिष्मती। भार्यातु स्वाहादेवी। अस्य आयुधः शक्तिः। वाहनं तु तगरः निवासस्थानं तु तेजोवती नामकं पट्टणं। अयं शिव प्रभावेन जन्म लेभे। द्वादशे वयसि एषुः आपद्ग्रस्तः भविष्यति इति नारदः उक्तवान्। अतः एषः अग्निः पित्रोः अज्ञानुसारं काशी क्षेत्रं गत्वा शिवाय उग्रं तपः कृतवान्। परन्तु इन्द्रः प्रत्यक्षाभू। वरं दातुं सन्नद्धः अभूत्। परन्तु तत् तिरस्कृत्य स्व तपं कुर्वन् अस्ति। तदा



कुपितः इन्द्रः स्व वज्रायुधेन तम् मूर्च्छितमकरोत्। तदानीम् परमशिवः आविर्भूय अग्निं संरक्ष्य वरान् अनेकान् अयच्छत्। अष्टावसुषु एषः तु एकः। सर्वभक्षकोऽपि एषः महापवित्रः। देवताभ्यः हव्यभागान् प्रदानं एव अस्य वृत्तिः। एवं प्रकारेण अग्निदेवः सकललोकवन्दितः अभूत्।।

## ३. यमः -



अस्य पिता सूर्यदेवः। माता तु संज्ञादेवी जाया तु श्यामलादेवी। एषस्तु पितृगणाधिपतिः। अस्य आयुधस्तु दण्डः। वाहनं महिषः। निवासस्थानं तु संयमनि नामकं पट्टणं। एषः धर्मात्मा। यमुनानद्याः सहोदरः। अस्य सेवकाः तु चित्रगुप्तः, लेखरी चन्डः, महाचण्डश्च धर्म परायणः धर्म अधर्म न्याय अन्याथ विवेचन विषये असौमहान् समर्थः। न्याय-धर्म परिरक्षकः पापात्मनं। जनानां शिक्षाप्रदानविषये असौ कुरालः। अस्य तु समवर्ती इत्यपि नाम अस्ति। शनीश्वरः तु अस्य सोदरः। अस्य तु वटवृक्षे तु महान् प्रीतिः।

## ४. निरृतिदेवः



एषस्तु निऋति दिशः अधिपतिः। कीर्तिमान् च। अस्य भार्या दीर्घादेवी आयुधस्तु कुन्तः। वाहनं तु नरः। निवासस्थानं तु कृष्णाङ्गवपट्टणं। एषस्तु पूर्वाजन्मनि पिङ्गाक्षनाम्ना सदाचार परायणः अवर्त्तत। अस्य पितृव्यः, दारकः तु दुर्वृन्तः सन् एकदा मार्गे पथिकान् संताड्य पीडितवान्। तदा पिङ्गाक्षः तत्र आगत्य दारकेन युद्धं कृत्वा, तस्मिन् युद्धे दारकेन मारितः, पुण्यलोकान् प्राप्तवान्। अनन्तरं नैरुतिदिशः अधिपतिः अभूत्।

**५.वरुणदेवः -**



एषस्तु पशिचमदिशायाः पालकः। यज्ञेषु हविर्भागान् एष एव नयति। जलाधिपतिः एषः। अस्य पिता तु कर्दमप्रजापितः। भार्या कालिकादेवी अस्य आयुधस्तु पाशः। वाहनं तु मकरः। निवासस्थानं तु श्रद्धावतीपट्टणं। अस्य तु शुचिष्मान् इत्यपि नाम अस्ति।

अस्य बाल्ये यदा एषः सरस्तीरे स्वमित्रैः सह क्रीडन् आस्ते, तदा एकः मकरः अमुम् संगृह्य समुद्रं प्रति नीतवान्। अस्य मित्राणि कर्दमं प्रति गत्वां मकरेण गृहीतः तव पुत्रः इति अक्तवन्तः। तदानीं कर्दमः तपोमग्नः आसीत्। एकः शिवभक्तः शिवेन प्रेषितः सागरं प्रति आगत्य तत्र शुचिष्मन्तं दृष्ट्वा एषः बालकः कथं अत्र आगतः। किमर्थं आनीतः इति पृष्टवान्। तदा समुद्रः भयेन तम् बालं शिवसमीपं प्रेषितवान्। शिवः तम् कर्दमसमीपं प्रेषितवान्। शिवदर्शन प्रभावेण शुचिष्मान् शिवाय कठोरतपं कृतवान्। शिवः प्रत्यक्षी भूय वरं वरय इति उक्तवान्। तदा एषः वरुणपथाय प्रार्थितवान्। शिवस्तु दत्तवान्। ततः प्रभृति एषः वरुणाधिपतिः बभूव।

**६. वायुदेवः -**



एषः पञ्चभूतेषु अन्यः। सर्वव्यापकः। महाबली। एषः जीवकोट्याः प्राणदाता शिवस्य अनुग्रहेण दिक्पालकपदवीं प्राणापानादि पञ्चामूर्तिमत्वं सर्वसत्वावबोधकत्वं च प्राप्तवान् पूर्वजन्मनि एषः पूतात्मो नाम ब्राह्मणः। कश्यपमहर्षेः वंशीयः। अस्य जाया तु अञ्जनादेवी अस्य आयुधं तु ध्वजः। वाहनं तु हरिणः। निवासस्थलं तु गन्धवती पट्टणम्।

वायुदेवः कुञ्जरस्य पुत्रिकायां अनुरक्तः आसीत्। तदानीं सा अञ्जना आञ्जनेय नामकस्य बालकस्य जन्म दत्तवती। आञ्जनेयः वायोः शौरसपुत्रः। असौ तु अग्नेः सन्मित्रम्।

**७. कुबेरदेवः -**



असौतु उत्तरदिशायाः अधिपतिः। धनाधिपतिश्च। भाग्यशाली अपि। अस्य जनकः विश्रवोब्रह्मा। माता तु इलबिला। भार्यायाः नाम चित्ररेखादेवी। अस्य आयुधं तु खड्गः वाहनं तु अश्वः अलकापुरी तु अस्य निवासस्थानं। रावणासुरः अस्य सोदरतुल्यः। (पितुः सपनेः पुत्रः) कुबेरः ब्रह्मदेवाय तपः कृत्वा नलकूबरं नामकं एक सुन्दरपुत्रं प्राप्तवान्। लंकापट्टणं पुष्पकविमानमपि ब्रह्मणः वरप्रभावात् प्राप्तवान्। रावणः बलगर्वितः वरगर्वितो भूत्वा लोकान् पीडयन् स्व अग्रजं 'कुबेरम् अपि सम्पीड्य पुष्पकविमानं लङ्कापट्टणं च आक्राम्यत्। तदा एषः शिवं प्रार्थितवान्। शिवः अस्मै अलकापुरी दत्तवान्। श्रीनिवासः पद्मावती परिणयसन्दर्भे कुबेरत एव ऋण स्वीकृतवान्। तस्मात् कारणात् एव अद्यापि श्रीनिवासः तत् धनं कुबेराय यच्छन् अस्ति। महालक्ष्मी कटाक्षसम्पन्नः कुबेरः धन्यः।

### ८.ईशान्यः

परमेश्वरस्तु ईशान्य दिशः अधिपतिः। जगदम्बा तु अस्य भार्या त्रिशूलं तु आयुधः। वाहनं तु वृषभः। अस्य निवासस्थानं तु यशोवती पट्टणम्। पार्वतीपरमेश्वरौ



''आदिदम्पती ''इति प्रसिद्धि गतौ। असौ सर्वेषां भक्तानां वाञ्छाः पूरयतीति बोलाशंकरः इति अपि प्रसिद्धिं प्राप। महाशक्तिमान्। त्रिमूर्तिषु एकः। त्रिनेत्रः एषः लयकर्ता च। निवासस्तु कैलासः। क्षीरसागरात् उद्भूतविषं स्वीकृत्य लोकान् सर्वान् रक्ष। भृगुमहर्षिणा शापः भूलोके लिंगाकारे एव पूजाः स्वीकरोति।



## लेखकेभ्यः स्वागतम्

सप्तगिरिमासपत्रिकायां प्रकाशनार्थं लेखनानि प्रेषयितुमर्हन्ति। लेखकाः कृपया अधोनिर्दिष्टसूचनाः अवश्यं पालयन्तु। तेन लेखानां परिशीलने, प्रकाशने च आनुकूल्यं भवति।

१. लेखनानि पत्रस्य एकस्मिन्नेव पार्श्वे लिखितं भवेत्। लेखनं मुद्रणे पृष्ठद्वयातिरिक्तं यथा न भवेत् तथा प्रेषयन्तु।
२. देवनागरिलिप्यां टङ्कणं कृत्वा यदि प्रेषयन्ति तर्हि सान्द्रमुद्रिकामपि प्रेषयन्तु। पेज्मेकर् अनु-६ मध्ये टङ्कणं कृत्वा प्रेषयन्ति चेत् उपकृताः भवेम।
३. प्रेष्यमाणं लेखनम् आत्मनः एव इत्यत्र धृवीकरणपत्रमवश्यं भवेत्।
४. लेखकाः स्वसङ्केतेन सह दूरवाणीसङ्ख्यामपि लिखन्तु।
५. रचनानां चयने, प्रकाशने च प्रधानसम्पादकस्यैव अन्तिमनिर्णयः। अस्मिन् विषये पत्रव्यवहारादिकं नानुमन्यते।
६. स्वरचनासम्बद्धचित्राण्यपि प्रेषयितुमर्हन्ति।
७. रचनायाः भाषा कठिना, दीर्घसमासयुक्ता वा मा भवतु।
८. पर्वदिनादिकमुद्दिश्य लिख्यमानं लेखनं मासत्रयपूर्वमेव प्रेषितं भवेत्।
९. लेखनस्य प्रतिस्वीकरणेच्छुकाः पर्याप्तप्रमाणेन पत्रालयचीटिकायुक्तं, मुखभागे सङ्केतेन युक्तं पत्राचारपुटकं संयोज्य प्रेषयन्तु।
१०. मुद्रितलेखनानि भगवदनुग्रहेण, पारितोषकेन च सत्क्रियन्ते।

भवतां लेखनप्रेषणार्थमस्माकं
**सङ्केतः**
प्रधानसम्पादकः
सप्तगिरिमासपत्रिका। ति.ति.दे. प्रेस् कांपौण्ड्
कपिलतीर्थं रोड्, तिरुपति
चित्तूरु - आं. प्र.
पिन् - ५१७ ५०७



# नरक चतुर्दशी

- एन्.उमादेवि

नरकशब्दार्थः नरकचतुर्दशी इत्युक्ते नरकात् (दुर्गतेः) तारयति या चतुर्दशी तिथिः सा नरकचतुर्दशी इति शास्त्र प्रमाणात् ज्ञायते। निर्णयसिन्धौ एवं वर्तते

आश्वयुज कृष्णपक्षस्य चतुर्दश्यां विदूधये।
तिलतैलेन कर्तव्यं स्नानं नरकभीरुणा।।

एवं प्रकारेण नरकलोकात् ये भयं प्राप्नुवन्ति ते कृष्णचतुर्दश्यां चन्द्रोदय समये तिलतैलेन अभ्यङ्गन स्नानं कुर्वन्तु इति पद्मपुराणे प्रोक्तम्।

यस्यां चतुर्दश्या अभ्यंगन स्नानं दीपदानं यमतर्पणं च कृत्वा मानवाः नरकलोकात् विमुक्तिं प्राप्नुवन्ति सा तिथिः नरकचतुर्दशी नाम्ना व्यवह्रियते इति केचित् वदन्ति। नरकचतुर्दश्याः ''प्रेत चतुर्दशी'' इत्यपि नामांतरं व्यवहारे वर्तते। तस्मिन् दिने नरकलोकात् विमुक्त्यर्थं यम धर्मराजमुद्धिश्य दीपदानां कर्तव्यमिति व्रतचूडामणः ग्रन्थे वर्तते। नरकलोक वासिनां जनानां पुण्यलोक प्राप्त्यर्थं क्रियमाणः उत्सव इति स्वेषां नरकलोक प्राप्ति राहित्याय क्रियमाणं कार्यकलाप दिनमिति, नरकलोक भय विरहाय क्रियमाणः चतुर्दशी महोत्सव इति विश्वासः। चतुर्दश्यांतु ये दीपान् नरकाय दधन्ति च। तेषां पितृगणाः सेर्व नरकात् स्वर्गमाप्नुयुः। इति शास्त्रवचनम्। नरकासुरः स्वस्य वधात् पूर्वं श्रीकृष्णः देवांश संभूत इति ज्ञात्वा तं क्षमाभिक्षां ययाचे। श्रीकृष्णः तस्य प्रार्थनां अङ्गीकृतवान् अस्याः क्षमा भिक्षायाः कारणात् नरकासुरस्य, तस्य मरण दिने स्नानं आचरितानां च पाप विमुक्तिः सम्प्राप्ता। अस्मिन् दिने ब्राह्मीमुहूर्ते तैलाभ्यंगनस्नानं कृत्वा यम तर्पणं ये कुर्वन्ति तेषां यमदर्शनं नास्ति इति शास्त्रवचनम्।

श्री कृष्णेने नरकासुरसंहारस्य अस्मिन् दिने कृतत्वात् अस्याः नरकचतुर्दशी इति नाम संजातं इति वदन्ति। हिमालय पर्वतप्रान्तेषु प्राग्ज्योतिषपुरे (दुर्गे) राक्षस राजः नरकासुरः आसीत्। सः भूमि पुत्रः, सः देवताः निर्जित्य ताभ्यः

अधिकारान् स्वीकृत्य इन्द्र सिंहासने अध्यतिष्टत्। देवमातुः अदितेः कर्णकुण्डलौ बलात्कारेण जग्राह। स्त्रियः हिंसमार्गेण अत्याचारैः बन्दीः कृत्वा अवमानं कृतवान्, अमुं विषयं इन्द्रः श्रीकृष्णाय निवेदयामास। नरकासुर बाधाभ्यः विमुक्तिं प्रर्थितवान्। तदा श्रीकृष्णः गरुडवाहनारूढः सत्यभामासहितः प्राग्ज्योतिषपुरं प्रति दण्डयात्राम् अकरोत्। पञ्चाननः मुरासुरः तस्य दुर्गस्य परिरक्षणं कुर्वन् आसीत्। सः श्रीकृष्णं प्रति युद्धाय समुपस्थितः, श्रीकृष्णः तस्य शिरश्छेदनं कृत्वा तं मारितवान्। सः दुर्गस्य समीपस्य कंदरे पतितः, तदा मुरासुरस्य सप्तपुत्राः श्रीकृष्णं प्रति युद्धाय सन्नद्धाः अभूवन्। श्रीकृष्णः युद्धे तान् सर्वान् पुत्रान् अवधीत् तदनन्तरं नरकासुरः स्वयमेव युद्धाय प्रश्यितः तदा श्रीकृष्णः सुदर्शन चक्रेण नरकासुरं जघान। अनन्तरं श्रीकृष्णः प्राग्ज्योतिषपुरे प्रविष्टवान्। तदा भूदेवी श्रीकृष्णस्य पुरतः आगत्य "हे स्वामिन्! भवता अद्य मारितः नरकासुरः आवयोः पुत्र एव भवति। वराहवतारे मम भवद्भिः सम्पर्कात् सम्बन्धात् नरकासुरः सञ्जातः सः देवान् निर्जित्य तेभ्यः गृहीतं प्रभूतं धनं अत्र वर्तते। तं धनराशिं भवान् स्वीकृत्य तस्य कुमारं भागदत्तमनुगृह्णातु" इत्यवदत्। अनन्तरं श्रीकृष्णः प्रग्ज्योतिषपुरे बन्धिताः स्त्रियः सर्वाः विमुक्तिं कृतवान्, भागदत्तं युवराजत्वेन पट्टाभिषिक्तं कृतवान्। नरकासुरस्य पीडाभ्यः हिंसाभ्यः विमुक्तिः सञ्जातेति कारणात् देवमानवा अत्यन्त प्रमोदेन दीपमालाः प्रज्वलितवन्तः तदारभ्यः दीपावली महोत्सवः लोके प्रचलतिस्म। नरकासुरः ब्राह्मीमुहूर्ते विनष्ट इति कारणात् तत्समये एव जनाः अभ्यङ्गन स्नानं कुर्वन्ति। अस्य महोत्सव सन्दर्भे दह्यमानाः (crackers) इयादयः नरकस्योपरि प्रयुक्ताः मारणायुधा इति सम्भाव्यते।



## सर्वेभ्यः 'सप्तगिरि' पाठकेभ्यः



## दशरा, दीपावली शुभाशयाः






# सुवर्णपुरीषम्

एकस्मिन् वने कश्चन महावृक्षः आसीत्। तत्र कश्चन पक्षी वासं करोति स्म। तस्य पुरीषम् सुवर्णमयम् असीत्।

एकदा कश्चन व्याधः तत् अरण्यं आगतवान्। तदा पक्षिणा तस्य पुरतः एव पुरीषोत्सर्जनं कृतम्। पूरीषं सुवर्ण इति दृष्ट्वन्तः व्याधस्य आश्चर्यं जातम्। सः चिन्तितवान् - 'जन्मनि एतावत्पर्यन्तम् अहम् एतादृशं विचित्रपक्षिणं न दृष्टवान्। अहो एतस्य पुरीषे सुवर्णम् उत्पद्यते' इति।

सः जालं प्रसार्य तं पक्षिणं गृहीतवान्। पञ्जरे स्थापितवान् च। पुनः एतादृशः विचित्रः पक्षी महाराजस्य समीपे एव भवेत् इति चिन्तयन् महाराजस्य एव एतं पक्षिणम् उपायनीकरोमि इति चिन्तयित्वा सः नगरं गतवान्। महाराजं दृष्ट्वा उक्तवान् च - 'महाराज, एषः कश्चन विचित्रः पक्षी। एतस्य पुरीषम् सुवर्णम् भवति' इति।

महाराजः अतीव सन्तुष्टः। सः सेवकान् उक्तवान् - 'भोः सावकाः, एतं पक्षिणं जागरुकतया रक्षन्तु। व्याधाय पारितोषिकं यच्छन्तु' इति।

तदा मन्त्री महाराजम् उक्तवान् - 'महाराज एषः व्याधः असत्यं वदति। कदाचित् वा पक्षिपुरीषे सुवर्णम् उत्पद्यते किम् एतत् असत्यमेव। व्याधस्य वचने विश्वासः न करणीयः। एतं पक्षिणं पञ्जरतः विमोचयतु' इति।

सेवकाः मन्त्रिवचनानुसारं पञ्जरद्वारम् उद्घाटितवन्तः। पक्षी पञ्जरतः उड्डीय राजभवनस्य उन्नते द्वारे उपविष्टवान्। तत्र सः पुरीषोत्सर्जनं कृतवान्। तत् पुरीषं सुवर्णमयम् आसीत्। राजादयः आश्चर्येण तत् दृष्टवन्तः।

तदा पक्षी चिन्तयति - 'मूर्खः अहं व्याधस्य जाले पतितः। मूर्खव्याधः मां महाराजस्य दत्तवान्। सः मूर्खः महाराजः मूर्खस्य मन्त्रिणा वचनानुसारं मां बन्धविमुक्तं कृतवान्। एवं समग्रं जगत् एव मूर्खमण्डलम्' इति।





## सुभाषितानि

नास्ति विद्यासमं चक्षुः नास्ति सत्यसमं व्रतम्।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम्॥

# भक्तसेवायाम्

## तिरुमलतिरुपतिदेवस्थानम्



तिरुमल तिरुपति देवस्थानस्य आध्वर्येन प्रचाल्यमानस्य श्रीमातृ श्री तरिगोण्ड वेङ्गमाम्बा अन्नप्रसादवितरण समुदायं ति.ति.दे. पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डि वर्यः आकस्मिकतया सन्दर्श्य, तत्र भोजनकर्तृभिः भक्तैः सह अन्नप्रसादसदुपायानां विवरणं स्वीकृतवान्।

तिरुमल तिरुपति देवस्थानेन प्रतिवर्षं श्रावणमासे निर्वह्यमाणे 'मनगुडि' कार्यक्रमस्य अन्तर्गते भागतया '२०१९' आगस्ट् '०८' दिनाङ्के गुरुवासरे आन्ध्र-तेलङ्गणाराष्ट्रयोः ११,५०० आलयेषु परिवेषणार्थं सामग्रीनां पूजनं तिरुमल श्रीस्वामिनः आलये पालक मण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डिदम्पतीः आचरितवन्तौ।





२०१९ जुलै '१६' दिनाङ्के मङ्गलवासरे तमिलनाडुमध्ये प्रमुखपुण्यक्षेत्रे काञ्चीपुरे श्रीवरदराजस्वामिनः आलये '४०' वर्षेषु एकवारं दर्शनप्रदातुः श्री अत्तिवरदराजस्वामिनः उत्सवं पुरस्कृत्य ति.ति.दे. पक्षतः पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बरेड्डि दम्पतीः कौशेयवस्त्रान् समर्पितवन्तौ।

२०१९ आगस्ट् '२३' दिनाङ्के शुक्रवासरे गोकुलाष्टमी उत्सवं पुरस्कृत्य ति.ति.देवस्थानस्य श्रीवेङ्कटेश्वरगोसंरक्षणशाला तिरुपति प्राङ्गणे श्रीवेणुगोपालस्वामिनः आलये वैभवेन निर्वहिते गोपूजामहोत्सवे पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डिः भागं गृहीत्वा गोपूजां वीक्षितवान्। एवञ्च कार्यक्रमे भागगृहीतेभ्यः भक्तेभ्यः गोपूजामहात्म्यं, गो वैभवं प्रोक्तवान्। तदनन्तरं गोसंरक्षाणार्थं ति.ति.दे. पक्षतः क्रियमाणान् विधिविधानान् सूचितवान्।




Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.



चित्तूरु जिल्ला, काणीपाके श्रीवरसिद्धिविनायक स्वामिनः ब्रह्मोत्सव अन्तर्गततया २०१९ सेप्टेम्बर् १० दिनाङ्के ति.ति.दे. पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बरेड्डि दम्पतीः, तिरुमल आलय प्रत्येकाधिकारी श्री ए.वि.धर्मारेड्डि दम्पतीः च ति.ति.दे., पक्षतः कौशेयवस्त्रान् भक्तिश्रद्धाभिः समर्पितवन्तः।

चित्तूरु जिल्ला, काणीपाके श्रीसिद्धिविनायक स्वामिनः ब्रह्मोत्सवे तिरुमल श्रीस्वामिपक्षतः कौशेय वस्त्र प्रदानार्थं समागतेभ्यः ति.ति.दे. पालकमण्डलि अध्यक्षाय श्री वै.वि.सुब्बारेड्डि दम्पतिभ्यः, एवं तिरुमल आलयप्रत्येकाधिकारिणे श्री ए.वि.धर्मारेड्डि दम्पतिभ्यः च काणीपाकालय कार्यनिर्वहणाधिकारी श्री देमुल्लुवर्यः सादरम् आलय मर्यादाभिः आहूय, तेभ्यः तीर्थप्रसादान् समर्पितवन्तः।





२०१९ आगस्ट् '२३' दिनाङ्के ति.ति.दे., तिरुपतिस्य श्रीवेङ्कटेश्वर गोसंरक्षणशालायां स्थिते श्रीवेणुगोपालस्वामिनः आलये वैभवेन गोपूजामहोत्सवः समाचरितः। अस्मिन् सन्दर्भे पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डि वर्यः तत्र स्थितस्य रामकोटि स्थूप समीपे सिथते पुस्तके रामकोटिं लिखितवान्। श्रीरामनामस्मरणं भक्तिमुक्तिदायकमिति महत्तरं सन्देशं भक्तेषु स्थाप्यमानः सन्देशः अयम्।



तिरुचानूरु श्री पद्मावती मातुः आलये ति.ति.दे. द्वारा निर्वहितस्य कार्यक्रमस्य दृश्यमिदम्। कार्यक्रमेऽस्मिन् भागगृहीतारः उन्नताधिकारिणः, भक्ताः।



SAPTHAGIRI
(SANSKRIT) ILLUSTRATED MONTHLY
Published by
Tirumala Tirupati Devasthanams
25-09-2019

०८-१०-२०१९ भौम्यवासरः
प्रातः चक्रस्नानम्

०५-१०-२०१९ स्थिरवासरः
प्रातः - सुवर्णरथरङ्गडोलोत्सवः

०७-१०-२०१९ इन्दुवासरः
प्रातः - रथोत्सवः